॥ हेरम्बोपनिषत् ॥

ॐ सहनाववतु । सह नौ भुनक्तु ।
सह वीर्यं करवावहै ।
तेजस्वि नावधीतमस्तु । मा विद्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

अथातो हेरम्बोपनिषदं व्याख्यास्यामः ।
गौरी सा सर्वमङ्गला सर्वज्ञं परिसमेत्योवाच ।
अधीहि भगवन्नात्मविद्यां प्रशस्तां यया जन्तुर्मुच्यते मायया च ।
यतो दुःखाद्विमुक्तो याति लोकं परं शुभ्रं केवलं सात्त्विकं च ॥ १॥

तां वै स होवाच महानुकम्पासिन्धुर्बन्धुभुवनस्य गोप्ता ।
श्रद्धस्वैतद्गौरी सर्वात्मना त्वं मा ते भूयः संशयोऽस्मिन् कदाचित् ॥ २॥

हेरम्बतत्त्वे परमात्मसारे नो वै योगान्नैव तपोबलेन ।
नैवायुधप्रभावतो महेशि दग्धं पुरा त्रिपुरं दैवयोगात् ॥ ३॥

तस्यापि हेरम्बगुरोः प्रसादाद्यथा विरिञ्चिर्गरुडो मुकुन्दः ।
देवस्य यस्यैव बलेन भूयः स्वं स्वं हितं प्राप्य सुखेन सर्वम् ॥ ४॥

मोदन्ते स्वे स्वे पदे पुण्यलब्धे सर्वैर्देवैः पूजनीयो गणेशः ।
प्रभुः प्रभूणामपि विघ्नराजः सिन्दूरवर्णः पुरुषः पुराणः ॥ ५॥

लक्ष्मीसहायोऽद्वयकुञ्जराकृतिश्चतुर्भुजश्चन्द्रकलाकलापः ।
मायाशरीरो मधुरस्वभावस्तस्य ध्यानात् पूजनात्तत्स्वभावाः ॥ ६॥

संसारपारं मुनयोऽपि यान्ति स वा ब्रह्मा स प्रजेशो हरिः सः ।
इन्द्रः स चन्द्रः परमः परात्मा स एव सर्वो भुवनस्य साक्षी ॥ ७॥

स सर्वलोकस्य शुभाशुभस्य तं वै ज्ञात्वा मृत्युमत्येति जन्तुः ।
नान्यः पन्था दुःखविमुक्तिहेतुः सर्वेषु भूतेषु गणेशमेकम् ॥ ८॥

विज्ञाय तं मृत्युमुखात् प्रमुच्यते स एवमास्थाय शरीरमेकम् ।
मायामयं मोहयतीव सर्वस प्रत्यहं कुरुते कर्मकाले ॥ ९॥

स एव कर्माणि करोति देवो ह्येको गणेशो बहुधा निविष्टः ।

स पूजितः सन् सुमुखोऽभिभूत्वा दन्तीमुखोऽभीष्टमनन्तशक्तिः ॥ १०॥

स वै बलं बलिनामग्रण्यः पुण्यः शरण्यः सकलस्य जन्तोः ।
तमेकदन्तं गजवक्त्रमीशं विज्ञाय दुःखान्तमुपैति सद्यः ॥ ११॥

लम्बोदरोऽहं पुरुषोत्तमोऽहं विघ्नान्तकोऽहं विजयात्मकोऽहम् ।
नागाननोऽहं नमतां सुसिद्धः स्कन्दाग्रगण्यो निखिलोऽहमस्मि ॥ १२॥

न मेऽन्तरायो न च कर्मलोपो न पुण्यपापे मम तन्मनस्य ।
एवं विदित्वा गणनाथतत्त्वं निरन्तरायं निजबोधबीजम् ॥ १३॥

क्षेमङ्करं सन्तत-सौख्यहेतुं प्रयान्ति शुद्ध गणनाथतत्त्वम् ।
विद्यामिमा प्राप्य गौरी महेशादभीष्टसिद्धिं समवाप सद्यः ।
पूज्या परा सा च जजाप मन्त्रं शम्भुं पतिं प्राप्य मुदं ह्यवाप ॥ १४॥

य इमां हेरम्बोपनिषदमधीते स सर्वान् कामान् लभते ।
स सर्वपापैर्मुक्तो भवति । स सर्वैर्वेदैर्ज्ञातो भवति ।
स सर्वैर्देवैः पूजितो भवति । स सर्ववेदपारायणफलं लभते ।
स गणेशसायुज्यमवाप्नोति य एवं वेद ।
इति उपनिषत् ।

ॐ सहनाववतु । सह नौ भुनक्तु ।
सह वीर्यं करवावहै ।
तेजस्वि नावधीतमस्तु । मा विद्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः ॥